जनि २०५, ७ । २२५, २ ।
जनित=(उत्पादितः), २००, २२ ।
जनितृ १२४,५१ । २२४, ५३ ।
जनित्र २२४, ५३ ।
जनित्री १२२, ३० ।
जनित्त्व=(पिता),
जनित्त्वा=(माता),
जनिमत्=(जन्मवान्), २००, ३० ।
जनी २०५,८ । २२५,२ ।
जनुष्मत् २००, ३० ।
जनुष् २००, २३ ।
जनू २००, २३ ।
जन्तु १३७, ५६ । २००, ३० ।
जन्म १३५, ७ । २००, २३ ।
जन्मकील २१५, ५३ ।
जन्मतिथि १३७, ३४ ।
जन्मद=(पिता),२२४, ५४ ।
जन्मदा=(माता),
जन्मन् ६, ३५ । १४४, ४४ । २२१, १८ ।
जन्मनक्षत्र १३७, ३४ ।
जन्मपत्र १३४, ४४ ।
जन्मपत्रिका १३४, ४४ ।
जन्मपत्री १३४, ४४ ।
जन्मभ १४४, ४४ ।
जन्मभनाथ १४४, ४६ ।
जन्ममास १३७, ३३ । १४०, २५ ।
जन्मराशि १४४, ४४ ।
जन्मराशिनाथ १४४, ४६
जन्मर्क्ष १४४, ४५ ।
जन्मर्क्षस्वामिन् १४४,४७।
जन्मलग्नेश १३०, ३८ ।
जन्मवत्=(जनिमत्), २००, ३१ ।
जन्मवार=(रव्यादिः),
जन्मान्तर=(परलोकः),
जन्माष्टमी=(श्रीकृष्ण-जन्मतिथिः),
जन्मिन् २००, ३१ ।
जन्य १२३, ५८ । २००, २४ ।
जन्या २२४, ५४ ।
जन्यु २००, २४ । २०७, ३३ ।
जप=(नियमविशेष) ।
जमन २००, ५४ ।
जम्पती १४०, ४ ।
जम्बाल=(शैवालः),
जम्बालनीड २५, ५५ ।
जम्बालिनी २४३, ५१ ।
जम्बुक २४३, २६ ।
जम्बूक २४३, २६ ।
जम्भः=(दैत्यविशेषः) २१४, १६ ।
जम्भभेदिन् २६६, ३६ ।
जम्भरिपु २६६, ३६ ।
जम्भारि २६६, ३७ ।
जम्भारिगुरु ४७, ५१ ।
जय १७, १ । १२,२४४ ।
'जयतः' १६३, २३ ।
जयति १६३, २३ ।
जयदत्त २३७, २७ ।
जयनी=(इन्द्रसुता),
जयन्त ३८, ४४ । २२७, ४५ ।
जयन्ताग्रज २२४, ३० ।
'जयन्ति' १६३, २३ ।
जयन्ती २३१, ६ । २३३, १८ ।
जयपुर ६६, २३ ।
जयवाहिनी २३७, २३ ।
जया ३, १३ । २३१, ६ । २३१, ३६ ।
जयातिथि ३, २० ।
जयाद्वादशी २२, २१ ।
'जयेत्' १६३, २३ ।
जयेताम् १६३, २३ ।
जयेयुः १६३, २३ ।
जयैकादशी २४, १८ ।
जरण ३८, ४५ ।
जरन्त २४२, २ ।
जराभीत २२०, १५ ।
जराभीरु २२०, १५ ।
जरायु १४०, १६ ।
जरासिन्ध=(असुरविशेषः) २१६, ३१ ।
जरासिन्धजामातृ २२६, ४७ ।
जरासिन्धारि २६६, १६ ।
जर्ण ३८,३२।१३७,५६ ।
जल ७, ४३ । १२, ५७ । ४४ । १२२, १४ ।
जलकरङ्क २३८, १६ ।
जलकांक्ष २३२, २४ ।
जलकांक्षिन् २३२, २४ ।
जलकान्त २३२, २४ ।
जलकान्तार २४३, २६ । २४४, ३२ ।
जलगोलमूर्ति ४१, २१ ।
जलचर २७, १५ । २८, ३७ । २४४, ८ ।
जलचौर ३२, ५७ ।
जलज २८, १६ । २८, ३८ । ३६, ३६ ।
जलजन्तु २४३, ४२ ।
जलजन्मन् ३६, ३६ ।
जलजराशि २८, २७ ।
जलजाक्षी २६, २२ । १२३, ४२ ।
जलजिनी ३६, ४८ ।
जलजिनीपति २६१, १६ ।
जलजिनीबन्धु ३४, १६ ।
जलजिनीश ३३, ४७ ।
जलतट=(जलकूल),
जलतस्कर ३३, ४७ ।
जलद २१८, १४ । २३८, १६ ।
जलदा २३८, ४४ ।
जलदागम=(वर्षाकालः)
जलदूषण २४४, ३३ ।
जलधर २३८, १६ ।
जलधरमाला=( मेघ-पंक्तिः),
जलधरमालाकाल १५,४१।
जलधिः ७३, ३ । ७३, १५ । २१८, १४ ।
जलधिगा २४३, ५१ ।
जलधिजा २१७, ११ ।
जलधिजाता २१७, ११ ।
जलनिधि २१८, १४ । २७०, ५२ ।
जलनिधितनय ४१, ४३ ।
ललनिधिभू ४०, २६ ।
जलप २१८, १४ ।
जलपनि २४३, २६ ।
जलपात २१४, ५३ ।
जलपालिका २३८, ४४ ।
जलपिप्पक २४४, ८ ।
जलपिप्पिक २४४, ८ ।
जलपीथ २१७, ३६ ।
जलभूषण २४३, २६ ।
जलभृत् २३८, २० ।
जलमण्डल ४०, २६ ।
जलमसि २३८, २० ।
जलमार्ग १३१, १८ ।
जलमुच् २३८, २० ।
जलमूर्ति २२८, ३२ ।
जलराशि २८, ३८ । २१८, १५ ।
जलरुण्ड २२३, ३६।
जलरुह् ३६, ३६
जलरुह ३६, ३७।
जललोहित २४२, २१ ।
जलवालिका २३८, ४५ ।
जलवाह २३८, २० ।
जलशायिन् २१५, २० ।
जलशाला १३७, ४३ ।
जलसमुद्र २१८, ३८ ।
जलसूकर २४३, ३७ ।
जलहत=(जलनिहत),
जलाकांक्ष २३२, २४ ।
जलाकांक्षिन् २३२, २५ ।
जलाधिदैवत २४३, २७ ।
जलार्णव १५, ४१ ।

दिनविभु ३३, १० ।
दिनशकल—१२, ३५, ६७।
१५ ।
दिनशुद्धि १३१, ३४ ।
दिनस्वामिन् २६१ । ३३।
दिनांश=(प्राह्णादयः),
दिनाण्ड ५४, ४० ।
दिनाधिनाथ ३३, ५१ ।
दिनाधिराज ३३, ५२ ।
दिनादि १२, २७ ।
दिनान्त १२, ४२ ।
दिनात्यय१२,४३।१३,२४।
दिनार्द्ध १३,३६।४३,१५।
दिनावसान १२, ४३ ।
दिनिका—(दिनभूति)
दिनेश ३२, २४ ।
दिनेशकरलुप्त १०७, १ ।
दिनेशकान्त्यामिहत १०७,
२ ।
दिनेशकिरणाच्छन्न १०७,२।
दिनेशतनय ५३, ६ ।
दिनेशभ — ६, ५६ ।
दिनेशसूनु ५२, ५१
दिनेश्वर ३३, १० ।
दिनेश्वरकरच्छन्न१०७,२।
दिनौघ=(अहर्गणः), ६८,
३ ।
दिन्दु २२५, ४७।
दिलीप २२६, ३८ ।
दिव् ३०, १ ।
दिव १२, ६ । ४५, २७।
१६८, ५ ।
दिवस १२, ६ । ३६,११।
दिवसकर ३३, ५२ ।
दिवसकररिपु ५४, २७ ।
दिवसकृत् ३३, १० ।
दिवसगण ६८, ४ ।
दिवसखण्ड ६७, १५,
दिवसदल १२, ३५ । ६७,
१५ ।
दिवसनिकर ६८, ४ ।
दिवसपति ३३, ५२।२३६,
३७ ।

दिवसप्रमाण ६७ । ११,
दिवसप्रवेश १३१, २६ ।
दिवसमणि ३३, ५२ ।
दिवसमान ६७ । ११,
दिवसमिति ६७, १२ ।
दिवसविभु ३३, ५३ ।
दिवसव्रज ६८, ४ ।
दिवसव्रात ६८, ५ ।
दिवसशकल ६७ । १६ ।
दिवसाधिनाथ ३४, २२ ।
दिवसार्द्ध ६७, १७।
दिवसेश ३२, २५ ।
दिवसेश ३३, ११ ।
दिवसेशसूनु ५३, ६ ।
दिवसेश्वर ३३, ५३ ।
दिवस्पति ४५, २७ ।
दिवः पृथिव्यौ
दिवा १२, ७ ।
दिवाकर ३३, ११ ।
दिवस्पृथिव्यौ ४५, २७ ।
दिवाकरकरच्छन्न१०७,२।
दिवाकरकरव्यासङ्गमुक्त
१०६, २ ।
दिवाकरसुत ५३, ६ ।
दिवाकरात्मज २२५, ५३।
दिवागण—६८, ५ ।
दिवाचय ६८, ५ ।
दिवाधीश—३३, ११ ।
दिवानाथ ३३, ११ ।
दिवानाथज ५२, ५१
दिवानायक ३३, ५३ ।
दिवानिश् १३, ४१ ।
दिवानेतृ ३३, १२ ।
दिवान्ध=(लग्नविशेषः)
दिवाबलिराशि २८ ,४५
दिवाभर्तृ ३३, १२ ।
दिवाभीत ३, ५६ ।
दिवामणि ३३, १२ ।
दिवामध्य १२, ३६ ।
दिवारात्र १३, ४२ ।
दिवावसान १२, ४३ ।
दिवाव्रज ६८, ५ ।
दिवाष्टमांश १२, ४० ।

दिवाह्वय १३, ५७ ।
दिवि—१८०, ५० ।
दिविचर २६, ३१ ।
दिविचराचार्य ४८, १८ ।
दिविजगुरु ४७, ५२ ।
दिविजेज्य ४७, ३०।
दिविषद् २६, २६ ।१६७,
४१ ।
दिविषन्नुतचरण ४८,५७।
दिवौकस् २६, २७ ।१६७,
४२ ।
दिवौकसांदेवगुरु ४८। ५७।
दिव्य ३०, २ । ६८, ३१।
दिव्यगायन २४७,६ ।
दिव्यदृश्—२५६, १
दिव्ययुग १७, ३१ ।
दिव्यवर्ष १७, ३१ ।
दिव्ययुष् १४६, ४५
दिव्योत्पात २५८ । १७ ।
दिश् २३५, १५ ।
'दिशतः' १८६, २।
दिशति १८६, २ ।
दिशन्ति १८६, २ ।
दिशांप्रिय २२७, ५०
दिशां प्रियतम २२७, ५०
दिशा १११, २२ ।
दिशातः ४६, १३
दिशाशूल २३५ । ५५ ।
दिशाशूलभेद २३६, ७ ।
'दिशेत्' १८६, ६ ।
दिशेताम् १८६, ६ ।
दिशेयुः १८६, ७ ।
दिश्य २३४ । १७ ।
दिष्ट ११, ४ । ६७ २६ ।
दिष्टमिति ६६, ३३
दिष्टान्त २२१, ३२ ।
दिष्टि—(परिमाणम्),
'दी' ५, १६ ।
दीक्षण १२४, ३३ ।
दीक्षा २१० , ६ ।
दीक्षाग्नि २४०, ५१
दीदिवि १६८, ५ ।
दीधिति ३६, १७ ।

दीधितिमत् -३३, १३ ।
दीन १२६, २४ ।
दीनार ६४, २०।
दीप—(गृहोपकरणम्),
दीपक २१०, ३२ ।
दीपमाला २३,६। २३,८ ।
दीपमालिका २३, ८ ।
दीपाली २३, ८ ।
दीपावली २३, ८ ।
दीपिका २१० । ५० ।
दीप्त १२६, २२ ।
२०३, ३६ ।
दीप्तक २०३, ३६ ।
दीप्तपिङ्गल २३१, ४५ ।
दीप्तमूर्ति ३३, १३ ।
दीप्तरश्मि ३३, १३ ।
दीप्ता २३८, ४५ ।
दीप्ताग्रकाष्ठ २४०, १५ ।
दीप्ताघा १२७, १८ ।
दीप्ति ३६, २३। १०५,७ ।
दीप्तिपति ३३, १४ ।
दीप्तिमत् ३२, २५ ।
दीप्तिरहित ४३, १० ।
दीप्र २३६, १६ ।
दीर्घ ११०, १ ।
दीर्घजिह्व २२३, ४१ ।
दीर्घना १३७, ५५ ।
दीर्घदर्शिन् २५५, ३६ ।
दीर्घनिद्रा २२१, ३२ ।
दीर्घपवन २३२, २६ ।
दीर्घपृष्ठ २२३, ४१ ।
दीर्घप्रक्षिन् २५५, ३६ ।
दीर्घमारुत २३२. २६ ।
दीर्घरसन २२३, ४१ ।
दीर्घायुष् १४५ १६ ।
दीर्णी २२३, ३२ ।
दुःख ३१, ४५ ।
दुःखनवमीव्रत २२, १८ ।
दुःखावसान=(दुरन्तः),
दुःखित=(दुःखी),
दुखिन्=(दुःखान्वितः),
दुःशकुन=(अशुभसूचक-
निमित्तम्)

भ

म—

## य —

र —

## ल

## श—

## ह—

इतिश्रीगढ़देशान्तर्गतदेवप्रयागसमीपवर्तिमुकुन्दाश्रमवासिना श्रीमुकुन्ददैवज्ञेन विरचिता ज्योतिष्-शब्दकोषस्थशब्दानामकारादिक्रमेण 'शब्दानुक्रमणिका' समाप्तिमगमत् ।
मुकुन्दाश्रम: वैक्रमीयवत्सरे २०२१ आश्विनशुक्लविजयादशम्याम् सितवासरे ।

# शुद्धि पत्रम्

| अशु० पा० | शु० पा० | अशु० पा० | शु० पा० | अशु० पा० | शु० पा० |
|---|---|---|---|---|---|
| तिथि | तिथिं: २, ३५ । | प्रप | अप १२, ४३ । | भेदा: | प्रभेदा: १८, १६ । |
| दिनो | दिना टि० ४, १ । | मासमेदा: | मासनामानि १४,१४ | भाग | भागवते १६, १ । |
| पा, पी, | या, यी, ५, ११ | सम्यातो | सम्पातो १५, २२ । | टिको | घटिको १६, ३ । |
| (लम्) | (मूलम्) ,, १२ | ऋतु: | ऋतु: १५ २३ । | रात्र | रात्र १६, २१ । |
| त्याश्वश | त्याश्वशब्दतो ५,३४। | ग्रीष्य० | ग्रीष्म प० १५, ३६ । | महु: | मुहु: १६, ४० । |
| शौद्रम् | रौद्रम् ६, ६ । | उष्मा | ऊष्मा १५, ३७ । | क्वापि | कुत्रापि २०, ७ । |
| सर्पोऽद्या | सर्पोघा: ६, ३५ । | रसमे | रसभे १५, ५६ । | पल | जल २१, १० । |
| दवतम् | दैवतम् ६, ४७ । | वष | वर्ष १६, ३१ । | रापरै | अपरै २१ १३ । |
| प्राष्ठ | प्रोष्ठ ८, २४ । | राक्षस | राक्षस: १७, १० । | मत्रो | मंत्री २५, ४ । |
| प्रन्त | अन्त ,, ४० । | द्वारी | दृगारी १७, १४ । | शन | शनि २५, १३ । |
| कर्माह; | कर्मार्हः ११, ३ । | श्चैते | चैते १७, १५ । | कुम्भे | कुम्भ २७, ५ । |
| कल्पम् | कल्यम् ११, २७ । | पितु | पितृ १७, २८ । | युग्म्म:, | युग्म: २७, ११ । |

| अशु० पा० | शु० पा० | अशु० पा० | शु० पा० | अशु० पा० | शु० पा० |
|---|---|---|---|---|---|
| मेव | मेवं २८, ३ । | (स्त्री०), | (स्त्री०ब०) ७४,४५। | दारू | दारु ,, ८ । |
| स्वामिन: | ० २८, २६ । | सन्न्यासा | सन्यासा ७५ टि २ । | फ ाकम् | फलकम् ११२, १३ । |
| ऊत | उत २९, १० । | श्रम: | श्रम ७५, टि २ । | मासमात्रश्यं | माषमात्रर्थ्यं ११२, टि. ७ । |
| शक | शकः २९, १३ । | नानि– | नानि ७५ टि ८ । | शंक्कार्द्धोन्तिनि | शंक्वर्घ्द्धोन्नति ११२ टि. २१ । |
| षर | षरः २९, ४७ । | संस्थावपा | संस्थाप्या ७५, ८ । | हेभ | ,, २२ |
| मघ: | मघः ३०, २७ । | कार्तवीर्ण | कार्त्तवीर्य ,, ११ । | शला:का | शलाका ११३ टि. २ |
| दुखम् | दुःखम् ३१, ४५ । | रज्या | राज्या ७६, ८ । | षौडश | षोडश ,, ,, १४ |
| हस: | हंसः ३२, १० । | (जिह्व:) | (जिह्वाः) ७६, ९ । | विहितप० | पिहितप ११८, २४ । |
| उण्णां | उष्णां ३२, १५ । | त्रिकृत्ति: | त्रिकृतिः ७६, १९ । | उक्तश्च | उक्तञ्च ,, टि. ३ |
| लोक: | लोकप० ३६, १३ । | ततः | ततः ७६, टि. ११ । | पदह्लि | यदह्लि ११९, ११ । |
| किरण: | किरणप० ३६, १५ । | सत– | सन– ७६, टि. १३ | सुहृद् | दुर्हृद् १२३, ८ । |
| कंजम् | कजम् ३६, ३५ । | योग, | योगा ,, ,, १४ । | रोग | रोगः ,, १० । |
| नेता: | नेता ३९, ३२ । | रन्घ्र | रन्ध्र ७७, ३ । | वध | बंधः १२५, १८ । |
| अमत | अमृत ४०, १३ । | द्वे द्व | द्वे द्वे ,, टि. ६ । | चतुरश्रं | (स्रं) |
| दीधित: | दीधितिः ४१, २२ । | ग्यना | ग्यता ७८ टि. २ । | वणाऊं | मणाऊं १३०, ३४ । |
| मणि: | रत्नम् ४१, ३३ । | नत्व, | तत्व– ,, टि. ३ । | आयोगे | अयोगे १३२, १८ । |
| रत्नम् | रत्नम् ४१, ४३ । | रणां | रिणां ,, टि. ४ । | रुचक, | रुचकः १३८, १५ । |
| कदम | कर्दम ४२, ५० । | अङ्ग | अङ्ग ७९, २० । | हर्म्यम, | हर्म्यम् ,, २० । |
| क्रर | क्रूर ४३, ५२ । | चतुर्वि | चतुर्वि ८०, १ । | चेत्यम्, | चैत्यम् ,, २१ । |
| मदि | मेदि ४४, २ । | त्रिशत, | त्रिशत्, ८०, ३१ । | छात्रव्रतिप० | छात्रव्रतिगृह प० १३६, २९ । |
| ताथज: | नाथजः ४६, २३ । | त्रितं– | त्रितयं ; ,, ४९ । | सूतिकागृप० | सूतिकागृहप० १३८, ३९ । |
| अक्षे | ऋक्षे ४६, २५ । | सस्त्व | तत्त्व ,, टि २ । | (उस्) | (उष्) १४०, ४९ । |
| (अन्) | (अस्) ४७, ६ । | रिंशत, | रिंशत् ८१, ५८ । | (उसू) | (उस्) १४०, ५० । |
| प्रकीण | प्रकीर्ण ४७, ८ । | नवनवति: | ऊननवतिः ८३,५६ । | इचैते उषन्ता:, | इचैतेशब्दा उषन्ताः १४१, १९ । |
| बेडय: | वेड्यः ४७, ३९ । | शत | शतः परि. ८४, ४ । | षष्टिद्विघ्नी, | षष्टिद्विघ्नी१४१,२३। |
| दैय | दैत्य ५१, ५४ । | चतुप० | चतुः प० ८५, ३ । | प्रव | प्रवि १४५, ३७ । |
| अशुकलज: | अशुक्लः ५२, ५ । | विंशति– | विंशतिप० ८, ३५ । | ऽथव | ऽथवा १५२, १३ । |
| भास्वद्भ्रू: | भास्वद्भ्रूः ५२,१२ । | ऽचांश:, | ऽचाशः ८७, ९ । | आप्त: | प्राप्तः १५२, ४२ । |
| सन्तन्ति: | सन्ततिः ५३, १८ । | अश:, | अंशः ८९, २७ । | उपग: | उपगतः १५२, ४८ । |
| गुरूभ | गुरुभ ५६, ३ । | तंत्रशोऽपि | तंत्रतोऽपि टि. ९६,१२ | पा | पापैः १५४, १३ । |
| ज्ञेयति | ज्ञेयानि ५७, २२ । | णग: | गणः ९७, ३९ । | इति | इतिः १५६, २७ । |
| चता | चैतानी ५७, २९ । | हीन: । | हीनाहः ९७, ४९ । | स्मरादि | स्मरारि १५८, ६ । |
| सुव | सुख ५७, ४९ । | ऽवाचार्यै | ऽवाचार्य्यै टि. ९८,१। | गिर | गिरि १५९, १२ । |
| अङ्ग | अङ्ग ५८, २७ । | मेर्वा- | मेर्वो- ९९, १६ । | ताञ्छील्ये | ताच्छील्ये १६१, ३४ |
| लाङ्गलि | लाङ्ग लि ५८, ३० । | लय: प० | लयप० १००, १४ । | आथे | अये १६२, ५२ । |
| मानम | मानम् ५८, ४४ । | 'केन्द्रभू:= | केन्द्रप० १०१, १३ । | ऋक्ष | ऋक्ष १६३, ८ । |
| अङ्गलि | अङ्ग लि ५८, ४५ । | भुजा | भुजो १०३, २५ । | भगण | भगणा १६५, १४ । |
| वस्यम् | वस्याम् ६४ टि २ । | भद्राश्च | भद्राश्व १०८,टि.३ । | | |
| दृष्यते | दृश्यते टि. ६५, १ । | (पत्तनम) | (पत्तनम्) १०८ टि.३ | | |
| कन्यस | कन्यसं ६६, १३ । | रीय | रीयं ११०, १९ । | | |
| चतुर । | चत्वारि । ७०, १४ । | ध्यामे | ध्याये ११० टि.१ । | | |
| शत, | शत् ७३, ४९ । | वृद्व | बृवल ११२, ७ । | | |

| अशु० पा० | शु० पा० |
|---|---|
| पद्धवतों | पद्धती ,, १६ । |
| त्रिमोर्व्व | त्रिमोर्व्वं , ४० । |
| हित्वार्क | हित्वार्कं १६६,४४ । |
| राराम्यां | राम्यां १६७, २८ । |
| (प) | (म) १६८, २६ । |
| सम | सम् १७०, १ । |
| विजोज | वियोज १७०, ४६ । |
| शुध | शुध् ,, ५१ । |
| ह्लस | ह्लस् १७१, २४ । |
| राशिका | राशिगा १७१, २६ । |
| त्यज | त्यज् १७१, ३६ । |
| कर्तके | कर्तके १७१, ४६ । |
| वनना | वनाना १७१, ५१ । |
| सुधी | सुधीः १७२, ४ । |
| वाऽग्नि | वाऽग्नि ,, ७ । |
| गुण | गुण् ,, ,, |
| सम+गुण | सम्+गुण् १७२,३१ |
| तड | तड् ,, ,, ३२। |
| परि+तड | परि+तड् ,, ३६ । |
| सम | सम् ,, ४० । |
| भक्क | भक्क् १७३, १७ । |
| भज | भज् १७३, १६ । |
| गत्था | ग्रन्था १७४, १३ । |
| ग्रसनम | ग्रसनम् ,, २२ । |
| संख्यैति | संख्यैरिति १७५,११। |
| तिग्मगेः | तिग्मगुः ,, ४२ । |
| सोत्थ | सहोत्थ ,, ४४ । |
| वन्धो | बन्धौ १७६, २० । |
| येत | येन ,, ३३ । |
| प्रयन्ति | प्रयान्ति १८१, ३६ । |
| व्याहरेत | व्याहरेत् १८५, ४ । |
| पाताम, | याताम् ,, २५ । |
| जगितः । | जगितः, ,, ३६ । |
| अद्यातम, | अद्याताम् १८७, ३ । |
| ईक्षेयातम्, | ईक्षेयाताम् १८८, १४ |
| निरीक्षेयेरन्, | निरीक्षेरन् ,, २१ |
| किलोपश्नतौ, | किलोपश्नतौ ,, ५२ |
| मन् ज्ञाते, | मन्ज्ञाने १८६, १२ । |
| मिय | मिष ,, १७ । |
| अस्त्र | अस्त्रं १६१, १० । |
| प्रभ्रति | प्रभृति १६६, २६ । |
| नह्यत | नह्येत ,, ५० । |
| नह्ययाताम्, | नह्येयाताम् ,, ,, |
| वर्तेत् | वर्तेत १६७, ६ । |
| गर्जयुः । | गर्जेयुः ,, १४ । |

| अशु० पा० | शु० पा० |
|---|---|
| तार्धाः, | ताद्याः १६६, १ । |
| ऋतुपुर्णादयः | ऋतुपर्णादयः१६६,१। |
| ऋतुः, | कस्तुः ,, १० । |
| ऋतुः, | कस्तुः ,, १६ । |
| ध्रुवदिक्प० | ध्रुवपितृप० २००,१६ |
| सञ्जा-तः, | सञ्जातः ,, २६ । |
| गौप० | गोप० ,, ४५ । |
| गौ | गौः ,, ४६ । |
| भेदा | भेदाः २०१, १ । |
| | शुक्रे २०१, ४ । |
| अमित्रः | अमित्र ,, ८ । |
| जिगांशुः, | जिघांसु २०१, १० । |
| यर्याया | पर्यायाः ,, २३ । |
| मन्नः | मन्न २०२, १ । |
| लोम्यः, | लोम्यः ,, २७ । |
| उद्दलः | उद्दालः ,, ३६ । |
| जूर्णाह्वयः | जूर्णाह्वय- २०२,४१। |
| मार्जित, | मार्जिता २०३, ८ । |
| चारू, | चारु ,, ३६ । |
| चारुरूपम् | ० ,, ३७ । |
| अश्चते | अश्चैते २०४, २१ । |
| भरूः | भीरूः २०५, १० । |
| प्रमवती | प्रेमवती ,, १३ । |
| किन्तरः, | किन्नर ,, ५० । |
| मालावां | मालायां २०६,३२। |
| दहिम्रघ्नः, | दहिम्रघ्नः ,, ४१ । |
| सन्तिः | सन्ति । २०७, ४ |
| प्रणदः, | प्राणदः ,, ४० |
| विरिञ्चि, | ० २०७, ४६ |
| स्वायम् | स्वायम्भु ,, ४५ |
| वृद्धाम्रंगुलिः, | वृद्धांगुलिः २१०, १४, १५ । |
| कर्णाटराम | कर्णाटराग १५, ५५। |
| ऋषि | ऋषिः २११, ५ । |
| (६) | (३) ,, १४ । |
| जैनेन्द्रः, | जैनेन्द्र— |
| नारायण, | नारायणः २१५,२४ |
| कबुरम् | कर्बुरम् २१७, ३६ । |
| जलपथिम, | जलपीथम् ,, ३६ । |
| गन्धः— | गन्ध— २१६, ३२ । |
| दामदरः, | दामोदरः २२४,३० । |
| प्रक्का, | अक्का, २२५, १ । |
| (त) | (तृ) ,, ४ । |
| उद्भूवः | उद्भवः २२६, ५६ । |
| वास, | वासः २२८, ३६ । |

| अशु० पा० | शु० पा० |
|---|---|
| दुर्वर्णम्, | दुर्वर्णम्-कम् २२८, ५१ । |
| महावसु | ० २२८, ५४ । |
| वसुश्रष्ठम्, | वसुश्रेष्ठम् २२६, १। |
| द्वक्प० | दृक्प०–२३०, १ । |
| ब्राह्मयादि, | ब्राह्म्याधादि २३०, २० |
| चरमाद्ग्ययव | चरमाद्ग्यव २३४,३। |
| पुमोजा, | पुलोमजा २३७,२४। |
| ० | षष्ठी ,, ३० । |
| भेतनम | केतनम् २४१, ७ । |
| नैर्ऋत | नैर्ऋत २४२, १० । |
| नैर्ऋतदिक्पालः, | दिक्पाल २४२,११। |
| कोणाधिपतिः, | नैर्ऋतिः ,, १३ । |
| निर्ऋृति | निर्ऋति २४२,१३ । |
| मनान्तरे— | मतान्तरे-२४५,१० । |
| लौकै | लोकै २४५, ३१ । |
| कुनन्दः, | कुन्दः २४६, ३६ । |
| मणिप्रावः | मणिग्रीव ,, ५२ । |
| माणिग्रीवः | माणिग्रीव २४६, ५३। |
| पन्य र्घप० | पण्यार्घप० २४७,३३। |
| सप्तदश | सप्तदशः २४६,१६ । |
| विचिन्ततम् | विचिन्तनम् २५०, २७ । |
| निरुप्पमाणः, | निरूप्यमाणः २५०, ३७ । |
| परिकल्पतः, | परिकल्पितः २५०, ४२ । |
| विलिप्तकासु | विलिप्तिकासु टि० २५१, ५ । |
| पययः । | पर्ययः २५२, ३१ । |
| फल | फलं २५७, २ । |
| स्फुरण | स्फुरणं २५७, २४ । |
| रोहिणी | रोहिणीपतिः २६२, २० । |
| अभिनेत्रेजननः, | अभिनेत्रजननः २६२, २६ । |
| ज्यष्ठ | ज्येष्ठ २६३, ११ । |
| ऋत्विक् | ऋत्विक् २६३, २७ । |
| बन्धः, | बन्धः ,, ४३ ।। |
| दङ्काम् | दङ्कम् २६४, ३ । |
| नीलदिति | नीलादिति ,, ६ । |
| वल्लभाः | वल्लभः २६७, ४५ । |
| यादिषु | श्यादिषु २७१, १६ । |
| लाक्ष्मीधरि | लाक्ष्मीधरेः २७२,१४ |
| चक्रधरेस्य | चक्रधरस्या ,, ,, |

श्रीमुकुन्ददैवज्ञपत्नीश्रीमतीचित्रादेवीविदुष्या सङ्कलिता

# *मुकुन्दग्रन्थनामाद्यावली

श्रीनन्दनन्दनाय नमः ।

देवज्ञ्यङ्घ्रिजपादाब्जं नत्वा चित्रा करोम्यहम् ।
मुकुन्दग्रन्थनामाद्यावलीं स्वभर्तृतुष्टये ॥१॥

श्रीवैक्रमीये वत्सरे १९४४ तुलार्कसंक्रमणतश्चतुर्विंशति–२४ मिते गतेऽहनि । भौमवारेऽसिताष्टम्यामाश्लेषाभेऽर्कोदयादिष्टम् ३।५७ तदानीं वृश्चिकोदयः तत्र बुधः । मकरे केतुः । कर्के चन्द्र-शनि-राहवः । सिंहे भौमः। कन्यायां शुक्रः। तुलायां रवि-गुरू तिष्ठतः-एवं ग्रहाणांस्थितयः मित्रग्रामे मम प्रियस्य मातामह-श्रीपण्डितोमादत्तशर्मा, तन्मन्दिरे तज्जनिरभूत् । तन्मातामही श्रीदुर्गादेवी,तस्यां जाता मम प्रियस्य जननी श्रीकीर्तिदेवी । अस्या अनुजः श्रीकेशवानन्दशर्मा तस्य पुत्राभावः । मम भर्त्तुर्द्वे भार्य्ये तयोः श्रीरुक्मिणीदेव्याद्या चित्रादेवी द्वितीया च आद्यायां श्रीचक्रधरशर्मा जातः एष तु लब्धस्वर्णपदकः एम्. ए. एल्. एल्. बी. पी. सी. एस् इत्याद्युपाधिसमलंकृतश्च । द्वितीयायां श्रीरमेशशर्मा जातः । मम प्रियस्य परमप्रियमुख्यशिष्यश्रीचक्रधरभट्टजोशीदेवप्रयाग-वास्तव्यः स एवाश्रमनिर्माता ।

तत्राऽऽदौ मम प्रियविरचितग्रन्थनामावली—

मुकुन्देन कृता ग्रन्था बहवः खण्डवासिना । तत्राऽऽदौ बालबोधाय ''ज्योतिश्शास्त्रप्रवेशिका' ॥१॥
ततः पञ्चाङ्गमञ्जूषा[१] 'होडाचक्रं[२]' ततः परम् ॥
'बालबोधदीपिका[४]'ऽथो 'दशाद्यामञ्जरी[५]' ततः ।२
'मुकुन्दपद्धति[६]'-श्चाथ 'मकरन्दतति[७]'–स्ततः ।
'आर्य्याद्यायाः सप्तते-श्चा-'शुबोधा[८] विवृति'स्ततः ॥३॥
'ज्योतिस्तत्त्वं'[९] कोशनामावल्यथो[१०] 'भावमञ्जरी[११]' । तस्या 'मधुव्रताटीका[१२]' ततो 'जातकभूषणम्[१३]' ॥४॥
ततः 'पीयूषधाराख्या[१४]' तस्य टीकाऽथ 'पद्धते': । कल्पवल्त्या–श्च भाषान्वय[१५]'स्ततः 'श्राद्धपद्धतिः[१६]' ॥५॥
तत 'आयुर्निबन्धाख्यः[१७]' कोशो मुकुन्दसंज्ञकः[१८] ।
'निबन्धोऽष्टकवर्गाद्य[१९]'स्तस्य टीका 'मनोरमा[२०]' ॥६॥
' ग्रहला[२१]घवकेतकयोः[२२]'सारिण्यौ–'भुक्ति[२३]-दाययोः[२४]' । ततो 'जातकसारो[२५]'ऽथो 'व्यापार-रत्नसञ्ज्ञकम्[२६]' ॥७॥
'रत्नाकरो[२७] ज्योतिषाद्यः' 'सूत्रान्तं जातकाभि[२८]धम्' । 'ज्योतिषाद्यः[२९] शब्दकोशः' 'सानुक्रमणिक'[३०]स्ततः ॥८॥
अथो 'ताजिकयोगाद्यः[३१] संग्रहो'ऽथ विदां मुदे ।
ग्रन्थानां चाप्यनेकानां शोधनं विवृतिः कृता ॥९॥

इति मुकुन्दग्रन्थनामावली समाप्ता ।'क्रमरहितैषा'।

---

अस्या मूल्यम् १।) सपादरूप्यकम् ।

(१) 'जातकसारः'* । (अमुद्रितः)
(संकलितः)
तत्रोपक्रमः—

प्रणम्य कृष्णं वसुदेवनन्दनं
गोपीजनानन्दकरं किलाऽनिशम् ।
करोम्यहं जातकसारमुत्तमं
सुबालकानां पठनाय धीमताम् ॥' इति ।
'मुकुन्द' इतिशेषः ।

उपसंहारश्च—

द्विषड्गोधरासम्मिते वैक्रमीये,
पतङ्गेऽलिगे, मार्गमासे सितान्ये ।
दले, कामतिथ्यां, सिताहे, व्यधायि
मया संग्रहः प्रीतये बालकानाम् ॥' इति ।

वैक्रमीयसंवत् १९६२ श. १८२७ । मुकुन्देन' इति शेषः । वृश्चिकर्के, मार्गशीर्षमासे, कृष्णपक्षे, त्रयोदश्याम्, शुक्रवासरेऽसौ 'जातकसारः, समाप्तिमगात् ।

(२) 'मुकुन्दविनोदसारिणी' ।
(स्वरचिता) (अमुद्रिता)
तत्रोपक्रमः—

श्रीकृष्णं व्रजभूनाथं नमस्कृत्य विदां मुदे । मुकुन्देन विरचिता सारिण्येषा निजाभिधा ॥' इति ।

उपसंहारश्च—

शाकेऽश्विद्वीभभूतुल्ये, मधौ मासे, सितेदले ।
पूर्णिमायां, भृगोर्वारे खण्डग्राम–निवासिना ॥
विपश्चिता मुकुन्देन रचिता सारिणी मया ।
विपश्चितां सुतोषाय भवत्वसावनारतम् ॥' इति ।

१८२८ तुल्ये शकाब्दे, चैत्रमासे, शुक्लपक्षे, पूर्णिमायां, शुक्रवासरेऽसौ मुकुन्दविनोद (ग्रहलाघवीय) सारिणी समाप्तिमगमत् ।

'केतक्याः' सारिणी तु 'ज्योतिस्तत्त्वे' संयोजिता । श्रीरामदयालुदैवज्ञकृतखेटप्रकाशिकायाः सारिणी बृहन्मुकुन्दपद्धतौ संयोजिता । उभे तत्र तत्र द्रष्टव्ये

(३) 'आयुर्दायसंग्रहः' । (संकलितः) (अमुद्रितः)
तत्रोपक्रमः—

प्रणम्य, नवनीतहरं
नन्दनिकेतखेलयन्तं, कृष्णम् ।
आयु–र्दाय–संग्रहं
करोमि गणकजनाऽऽनन्दाय ।' इति ।
'मुकुन्द' इति शेषः ।

उपसंहारश्च—

खगुणदन्तिधराप्रमिते शके
'सहसि मास्यलिभंगत उष्णगौ'
सितदले कतिथौ बुधवासरे
रघुवराङ्गभुवा विदुषा मया ॥
संगृहीतो मुकुन्देनाऽऽयुर्दायाभिधसंग्रहः । होराशास्त्रविदां तुष्ट्या एष भूयादनारतम् ॥' इति ।

१८३० तुल्ये शकाब्दे, मार्गशीर्षमासे, वृश्चिकगते रवौ, शुक्लपक्षे, द्वितीयातिथौ बुधवारेऽयं समाप्तिमगात् ।

(४) 'मुकुन्दविलाससारिणी' ।
(स्वरचिता) (अमुद्रिता)
तत्रोपक्रमः—

'प्रणम्य नन्दनन्दनांघ्रिद्वयं क्रियते मया मुकुन्देन ।

मुकुन्दविलासनाम्नी दशासारिणी हिताय शिष्या-णाम् ।।' इति ।

उपसंहारश्च—

'शाके खाग्नीभभूतुल्ये, तपः संक्रमणे दिने ।
सारिण्येषा मुकुन्देनच्छात्राणां प्रीतये कृता ।' इति ।

१८३० तुल्ये शकाब्दे माघसंक्रान्तिदिनेऽसौ-मुकुन्दविलास (दशाऽन्तर्दशा) सारिणी समाप्ति-मगात् ।

(५) **'एकोद्दिष्टश्राद्धपद्धतिः'** ।

(संकलिता) (अमुद्रिता)

तत्रोपक्रमः—

गयां गदाधरं नत्वै—कोद्दिष्टश्राद्धपद्धतिः । विर-च्यते मुकुन्देन हिताय कर्म्मकाण्डिनाम् ।।' इति ।

उपसंहारश्च—

वैक्रमीयेऽङ्गषड्गोऽब्जतुल्ये राधेऽजगे रवौ ।
अकार्य्येषा मुकुन्देन भूसुराणां मुदे मया ।।' इति ।

वैक्रमीयसंवत् १९६६ (श. १८३१) वैशाखमासे क्रियगते सवितरि, इयमेकोद्दिष्टश्राद्धपद्धतिः समाप्तिमाप्ता ।

* (६) **'मकरन्दततिः'** ।

तत्रोपक्रमः—

श्रीदेवकीतनुभवं जगतां निवासं
श्रीकृष्णमम्बुधिसुतासहितं प्रणम्य ।
मूर्ध्ना मुकुन्दगणकस्तिथिपत्रसिद्ध्यै
स्पष्टां करोमि मकरन्दततिं मनोज्ञाम् ।।' इति ।

उपसंहारश्च—

शक इलात्रिभुजङ्गमभूमिते-
ऽहिमकरेऽजगतेऽब्जतिथौ सिते ।
ग्रहनि गौरगुजस्य मुकुन्ददैवविद्
व्यरचयन्मकरन्दततिं स्फुटाम् ।।' इति ।

'गणकमुदे' इतिशेषः ।

१८३१ शकाब्दे, क्रियगते कमलिनीनाथे शुक्ले दले पूर्णिमायां बुधवासरे चैषा समाप्तिमगमत् ।

(७) **'बृहद्होडाचक्रम्'** ।

एतत्तु मुद्रित दुर्दैववशादधुनाऽस्य प्राप्ते रभावः, तेन मुद्रण परमापेक्षितम् ।

तत्रोपक्रमः—

अद्रेः कुञ्जे खेलयन्तं कुमारैः—
गोभिः साकं बालकृष्णं प्रणम्य ।
होडाचक्र सारभूतं मनोज्ञं—
कुर्वे प्रीत्यै बालकानां मुकुन्दः ।।' इति ।

उपसंहारश्च—

इषसितरवितिथ्यां भूगुणेभेन्दुतुल्य-
शकशरदि मुकुन्देनाऽमरेज्यस्य वारे ।
सुरुचिरमिह होडाचक्रमेतद् व्यधायि
बुधरघुवरपुत्रेणाऽर्भकाणां हिताय ।।' इति ।

१८३१ शकाब्दे आश्विनशुक्लसप्तम्यां गुरुवासरे चैतत्समाप्तिमगमत् ।

(८) **'ज्योतिश्शास्त्रप्रवेशिका'** । **(मुद्रिता)**

तत्रोपक्रमः—

प्रणम्य राधिकानाथं देवकीनन्दनं हरिम् ।
करोमि बालबोधाय ज्योतिश्शास्त्रप्रवेशिकाम् ।।'

इति । 'मुकुन्द' इति शेषः ।

---

*एषा पञ्चाङ्गाभावे महत्युपयोगिनी ज्योतिर्विदाम् किन्तु देशदुर्भाग्यवशादस्यामुद्रणं न जातम् ।

उपसंहारश्च—

शके धराग्नीभधरामिते मधौ
सितेतरे विष्णुतिथौ गुरोर्दिने ।
इयं मुकुन्देन च खण्डवासिना
सुबालकानां पठनाय निर्मिता ।।' इति ।

१८३१ शकाब्दे चैत्रकृष्णद्वादश्यां गुरुवासरे चैषा समाप्तिमगमत् ।

(९) '**पञ्चाङ्गमञ्जूषा**' । (**मुद्रिता**)

तत्रोपक्रमः—

श्री-हरी-शाऽज-गुर्वादीन् पितरौ प्रणिपत्य च ।
कुर्वे पञ्चाङ्गमञ्जूषां शिष्यबुद्धि-विवृद्धये ।' इति ।
अहं मुकुन्द इति शेषः ।

उपसंहारश्च—

मया मुकुन्दरामेण खण्डग्रामनिवासिना ।
कृता पञ्चाङ्गमञ्जूषा शाके दन्तेभकून्मिते ।।
माघे च धवले पक्षे पञ्चम्यां शनिवासरे ।
बालानां सुखसिद्ध्यर्थंप्रदा भवतु मत्कृतिः ।।' इति ।

१८३२ शकाब्दे माघशुक्लपञ्चम्यां शनिवासरे चैषा समाप्तिमगात् ।

(१०) '**बृहज्ज्योतिश्शास्त्रप्रवेशिका**' । (**अमुद्रिता**)

तत्रोपक्रमः—

प्रणम्य देवकीसूनुं रुक्मिणीवल्लभं सताम् ।
मुदे रचयति बृहज्ज्योतिश्शास्त्रप्रवेशिकाम् ।।'
इति । अहं मुकुन्द इति शेषः ।

उपसंहारश्च—

शके कराग्नीभरसामिते मधौ
सितेतरे स्कन्दतिथौ रवेर्दिने ।
इयं मुकुन्देन च खण्डवासिना
सुबालकानां पठनाय निर्मिता ।।' इति ।

१८३२ शकाब्दे चैत्रकृष्णषष्ठ्यां रविवासरे चैषा समाप्तिमगात् ।

(११) '**अष्टकवर्गसंग्रहः**' ।
(सङ्कलितः) (अमुद्रितः)

'तत्रोपक्रम':—

प्रणिपत्य प्रियं गोप्या गोपिकानन्दवर्द्धनम् ।
करोत्यष्टकवर्गाद्यं संग्रहं सुधियां मुदे ।।' इति ।
'मुकुन्द' इति शेषः ।

उपसंहारश्च—

शकेऽमरेभभूतुल्ये हरिणोपगते हरौ । संग्रहो-
ऽष्टकवर्गाद्यो मयाऽकारि विदां मुदे ।।' इति ।
'मुकुन्देने' ति शेषः ।

१८३३ शकाब्दे मकरगे मिहिरे अष्टकवर्गसंग्रहः समाप्तिमगमत् ।

'**पद्धतिकल्पवल्ली**' ।
श्रीविट्ठलाचार्य्यविरचिता ।
साच—
(१२) मुकुन्दकृतान्वयभाषोदाहरणैः समलङ्कृता ।

तत्रोपक्रमः—

श्रीकृष्णचन्द्रं वृषभानुजां श्री—
चण्डीप्रसादं स्वगुरुं च नत्वा ।
भाषां स्फुटां पद्धतिकल्पवल्ल्याः
करोमि सच्छिष्यमुदे मुकुन्दः ।।' इति ।

उपसंहारश्च—

शक इषुज्वलनाष्टमहीमिते
वृषभगे वृषभध्वजवन्दिते ।
रतिपतेस्तु तिथौ सरवौ सिते
रघुवरस्य सुतेन सुधीमतः ।।१।।

असौ मुकुन्दरामेण खण्डग्रामनिवासिना ।
अकारि पद्धतेर्भाषा गुरुपादाम्बुजालिना ॥२॥
निर्मत्सरान् सुगणका-नहं सम्प्रार्थयेऽनिशम् ।
यदत्रानुचितं किञ्चिच्छोधयन्तु दयान्विताः ॥३॥
मे श्रमोऽयं मुदे भूयात्सर्वदाऽध्येतुमिच्छताम् ।
सन्देहातपखिन्नानां छात्राणां छत्रसन्निभः ॥४॥'
इति ।

१८३५ शकाब्दे वृषगेऽर्के रविवारयुतायां ज्येष्ठ-शुक्लत्रयोदश्यां चासौ समाप्तिमगात् ।

(१३) '**ज्योतिः सारसंग्रहः**' ।

अस्य

'प्रथमो भागः'

(सङ्कलितः) (अमुद्रितः)

'तत्रोपक्रमः'—

हृदि निधाय गोवर्द्धन—
धरचरणसरोजं परममपवित्रम् ।
क्रियते मया संग्रहो
ज्योतिः साराद्यः सतां तोषाय ।' इति ।
'मुकुन्देनेति शेषः ।

उपसंहारश्च—

द्विशैलाङ्कभूसम्मिते वैक्रमीये
पतङ्गेऽजगे माधवे शुक्लपक्षे ।
विवस्वत्तिथौ सौम्यवारे मयैष
कृतः संग्रहो हौरिकाणां सुखाय ॥' इति ।
मुकुन्देने ति शेषः ।

१८७२ वैक्रमीयेऽब्दे मेषगेऽर्के वैशाखशुक्लसप्तम्यां बुध वासरे चासौ समाप्तिमगमत् ।

अस्य

'द्वितीयो भागः'

(सङ्कलितः) (अमुद्रितः)

तत्रोपक्रमः'—

'पूज्यान् सम्पूज्य पूर्व-माशिषमादाय स च तेषाम् ।
करोति मुकुन्द इष्ट-कालादिकनिर्णयसंग्रहम् ॥'
इति । अस्योपसंहारो नास्ति ।

अस्य

'तृतीयभागः'

(सङ्कलितः) (अमुद्रितः)

तत्रोपक्रमः—

निधाय हृदये कृष्ण-पादाम्भोजं मुदे सताम् ।
विधीयते मुकुन्देन ज्योतिः सारादिसंग्रहः ।' इति ।
अस्यैयोपसंहारो नास्ति ।

(१४) '**जातकपारिजातादिसंग्रहः**' ।

(सङ्कलितः) (अमुद्रितः)

तत्रोपक्रमः—

प्रणम्य तं यो वसुदेवसूनुः
श्रीकृष्णचन्द्रो गणको मुकुन्दः ।
करोम्यहं जातकपारिजाता—
दिसंग्रहं बुद्धिमतां हिताय ॥' इति ।

उपसंहारश्च—

शकेऽश्यग्निनागेन्दुतुल्ये नभस्ये
दले पाण्डुरे सोमतिथ्यां भपाहे ।
मुकुन्देन भूदेवतेन व्यधायि
विदां प्रीतये संग्रहः सर्वदैषः ॥' इति ।

१८७८ शकाब्दे भाद्रपदे शुक्लपक्षे पौर्णमास्यां चन्द्रवासरे चायं समाप्तिमगमत् ।

(१५) 'नष्टजातकसंग्रहः ।'
(सङ्कलितः) (अमुद्रितः)

तत्रोपक्रमः'—
श्रीकृष्णं रुक्मिणीजानिं नत्वा मुकुन्ददैववित् ।
कुर्वेऽहं विदुषां प्रीत्यै नष्टजातकसंग्रहम् ॥' इति ।

उपसंहारश्च—
युगागाङ्कभूसम्मिते वैक्रमीये
शुचौ शुक्लपक्षे कलानाथतिथ्याम् ।
इने युग्मयाते कृतः संग्रहोऽयं
मुकुन्देन होराविदां प्रीतयेऽस्तु ॥' इति ।
१९७४ वैक्रमीयाब्दे आषाढशुक्लपक्षे पूर्णिमायां मिथुनेऽर्के चासौ समाप्तिमगात् ।

(१६) 'दशामञ्जरी' । (मुद्रिता)

तत्रोपक्रमः'—
नत्वा गुरुं गणेशं च वासुदेवं सराधिकम् ।
दशामञ्जरिकां कुर्वे होराशास्त्रविदां मुदे ॥' इति ।

मुकुन्द इति शेषः ।

उपसंहारश्च—
'सिद्धश्रीगढवालनीवृति महाढांगूप्रदेशान्तरे
खण्डे संवसथे द्विजातिमहितः श्रीचन्द्रदत्तोऽजनि ।
तस्माच्छ्रीकलिरामनामविदितः श्रीख्याति
रामस्तत-स्तस्माद्दीनदयापरो रघुवरः श्रीमान्
प्रभूतादरः ॥
शकेऽङ्करामाहिधराप्रमाण—
इषे सिते धातृतिथौ कु (जाहे) जेऽह्नि ।
असौ दशामञ्जरिका व्यधायि
मुकुन्दरामेण तदात्मजेन ॥' इति ।

१८३९ शकाब्दे आश्विनशुक्लद्वितीयायां भौमवासरे चेयं समाप्तिमगमत् ।

(१७) 'मुकुन्दपद्धतिः' । (मुद्रिता)

'तत्रोपक्रमः'—
जगज्जीवनं राधिकाऽऽराध्यदेवं
रमानायकं कृष्णचन्द्रं प्रणम्य ।
मुकुन्दाऽभिधां पद्धतिं मञ्जुलाञ्च (सारिणीं च)
प्रकुर्वेमुदे हौरिकाणां मुकुन्दः ॥' इति ।

उपसंहारश्च—
चेदत्र कुत्रापि भवेत्प्रमाद—
स्तं सूरयः श्रेष्ठतराः क्षमध्वम् ।
संगृह्य दैवज्ञकृतेस्तु सारं
समीरितं शिष्यमुदे मयाऽत्र ।
खण्डाभिधे संवसथे द्विजान्वये,
श्रीचन्द्रदत्तोऽजनि मंत्रशास्त्रवित् ।
तस्मात्प्रजातः कलिरामसञ्ज्ञको—
ऽतः ख्यातिरामोऽजनि धर्म्मतत्परः ॥
तस्माच्छ्रीमान् रघुवरो जातो धर्म्मपरायणः ।
तत्सुतेन मुकुन्देन निर्मिता पद्धतिः स्फुटा ॥
शाकेऽब्ध्यब्धीभभूतुल्य, इषे मासे सिते दले ।
सप्तम्यां सौम्यवारे च समाप्तिमगमत्त्वियम् ॥' इति । १८४४ शकाब्दे आश्विनशुक्लसप्तम्यां बुधवारे चेयं समाप्ता ।

'आर्य्यासप्ततिः' । (मुद्रिता)
श्रीभट्टोत्पलाचार्य्यविरचिता ।
सा च
(१८) मत्कृताऽऽशुबोधाख्यया संस्कृतव्याख्यया समलङ्कृता ।

'तत्रोपक्रमः'—

श्रीसूर्यादीन् खेचरानीश्वरीं च
शम्भुं विष्णुं माञ्च तातं प्रणम्य ।
आर्य्याद्यायाः सप्ततेराशुबोधां
टीकां कुर्वे प्रीतये हौरिकाणाम् ॥

मुकुन्द इति शेषः ।

उपसंहारश्च —

देवापगावामभागे देशे श्रीगढपालके ।
खण्डग्रामे सुरुचिरे भारद्वाजकुले ह्यभूत् ॥
कलिरामो द्विजश्रेष्ठस्तस्माज्जाताः सुतास्त्रयः ।
तेषां मध्ये कनिष्ठो यः ख्यातिरामाभिस्ततः
विप्रर्षभो रघुवरो दयालुः सर्वधर्म्मवित् ।
तद्धर्म्मपत्नी कीर्त्त्याख्या तस्यां जातास्त्रयः सुताः ॥
ज्येष्ठो मुकुन्दरामाख्यो गुरोश्चण्डीप्रसादतः ।
लब्धविद्यस्त्विमां टीकामार्य्याद्यायाश्च सप्ततेः ॥
चक्रे ऽब्ध्यगाङ्कभूतुल्ये वत्सरे, च सहस्यके ।
मासे पक्षेऽसिते, षष्ठ्यां गुरावेषा समापिता ॥'

इति । १९७४ वैक्रमीयाब्दे पौषकृष्णषष्ठ्यां गुरुवारे चैषा समापिता ।

(१९) 'ताजिकयोगसंग्रहः ।'

(सङ्कलितः) (अमुद्रितः)

'तत्रोपक्रमः'—

प्रणम्य वंशीवटमूलवर्तिनं
कृष्णं सराधं व्रजकाननौकसम् ।
कुर्वे मुकुन्दो बुधभृङ्गसम्मुदे
सुमञ्जुलं ताजिकयोगसंग्रहम् ॥' इति ।

उपसंहारश्च —

शाकेऽङ्करामेभधरामिते तपो—
मासे सिते धातृतिथौ सितग्वहे ।
अयं मुकुन्देन बुधेन निर्मितो
मनोहरस्ताजिकयोगसंग्रहः ॥' इति ।

१८३९ शकाब्दे माघसितद्वितीयायांशुक्रवारेऽयं समाप्तिमगात् ।

'ज्योतिः सारसंग्रहः ।'

अस्य

'चतुर्थभागः'

(सङ्कलितः) (अमुद्रितः)

तत्रोपक्रमः—

वसुदेवात्मजं नत्वा वृन्दावनविहारिणम् ।
मुकुन्दो विन्मुदे कुर्वे ज्योतिः साराख्यसंग्रहम् ॥'

इति ।

उपसंहारश्च—

शके भूश्रुतीभेन्दुतुल्ये द्युनाथे
तुरङ्गङ्गते पौषशुक्ले नवम्याम् ।
दिने चन्द्रसूनोर्मया निर्मितोऽसा—
वगात्पूर्णतां संग्रहः सन्मुदेऽस्तु ॥' इति

मुकुन्देनेति शेषः ।

१८४१ शकाब्दे धनुषीने पौषशुक्लनवम्यां बुधवारे चासौ पूर्णतामगात् ।

अस्यैव

'पञ्चमो भागः'

(सङ्कलितः) (अमुद्रितः)

तत्रोपक्रमः—

गोगोपबालैः सह खेलयन्तं
बालं मुकुन्दं व्रजकाननेशम् ।
नत्वा जनु' पद्धतिसंग्रहाख्यं
करोम्यहं हौरिकपान्थतुष्ट्यै ॥' इति ।

मुकुन्द इति शेषः ।

उपसंहारश्च—

शकेऽक्षाब्धीभभूतुल्ये मार्गे शुक्ले स्वभूतिथौ ।
काह्वे कृतो मुकुन्देनैष ज्योतिः सारसंग्रहः ॥' इति ।

१८४५ शकाब्दे मार्गशीर्षशुक्लपक्षे द्वादश्यां रविवासरे चासौ समाप्तिमगात् ।

(२०) 'व्यापाररत्नम्' ।

(सङ्कलितम्) (अमुद्रितम्)

'तत्रोपक्रमः'—

श्रीराधिकेशं वसुदेवसूनुं
जगन्निवासं व्रजभूमिपालम् ।
प्रणम्य कृष्णं विदुषां हिताय
व्यापाररत्नं तनुते मुकुन्दः ॥' इति ।

उपसंहारश्च—

देशे गढे जाह्नवीवामकूले
खण्डाभिधे संवसथेऽभवद्यः ।
श्रीकीर्तिदेव्यास्तनुजो मुकुन्दः
शकेऽक्षवेदेभधरोन्मिते ऽब्दे ॥
मासे तपस्ये कलशे दिनेशे
पक्षे सिते भानुतिथौ ज्ञवारे ।
तेनार्थदं सङ्कलितं व्यधायि
व्यापाररत्नं वणिजां स्ववृद्धयै ॥' इति ।

१८४५ शकाब्दे फाल्गुनमासे कुम्भेऽर्के शुक्लसप्तम्यां बुधवासरे चेदं समाप्तिमगमत् ।

'रमलनवरत्नम्' ।

श्रीमत्पण्डितपरमसुखोपाध्यायेन विरचितम् ।

तच्च—

(२१) मुकुन्दकृतया संस्कृतव्याख्यया समलङ्कृतम् । (अमुद्रितम्)

'तत्रोपक्रमः'—

यदुपतिपादसरोजं
नमस्कृत्य रमलनवरत्नाख्यस्य ।
व्याख्यां करोमि मुकुन्द—
दैवविद्धिताय दैवविदाम् ॥' इति

'उपसंहारश्च'—

'वर्षाङ्गेभाङ्कभूतुल्ये तपसीने मृगोपगे ।
मुकुन्देन कृता व्याख्या पूर्णतामगमत्त्वियम् ॥' इति ।

१९८७ वैक्रमीयाब्दे माघमासे मकरभगे भगे चेय समाप्तिगता ।

'केतकीयग्रहगणितम्' ।

श्रीमत्पण्डितवेङ्कटेशदैवज्ञेन विरचितम् ।

तच्च–

(२२) मत्कृतयाऽन्वयार्थभाषाटीकया समलङ्कृतम् । (अमुद्रितम्)

'तत्रोपक्रमः'—

हृदि सन्निधाय कृष्णं
केतकीयग्रहगणितस्य विवृतिम् ।
अन्वयार्थाद्यामहं
करोमि बालजनस्य सुखाय ॥' इति ।

'मुकुन्द' इति शेषः ।

'उपसंहारश्च'—

शाकेऽर्थाक्षेभभूतुल्ये नभसीन्दुतिथाविदम् ।
अगमत्पूर्णतां भूयाद् बालानां सुहृदां मुदे ॥' इति ।

१८५५ शकाब्दे श्रावणपूर्णिमायामिदं समाप्तिमगात् ।

(२३) 'ज्यौतिषरत्नाकरः ।' (सङ्कलितः) (मुद्रितः)

'तत्रोपक्रमः'—

गोभिर्युतो गोपगणप्रपन्नो
गोलोकपो गोकुलभूविहारी ।
गोपालहृन्मोदकरो ऽभ्रदहो
गोपालरूपो जयति व्रजेशः ॥' इति ।

ग्रन्थाभावादग्रस्थपाठो नोपलभ्यते ।

'उपसंहारश्च'—

शाकेऽद्रिबाणेभधराप्रमाणे
राधेऽसिते स्कन्दतिथौ ससौम्ये ।
रत्नाकरो ज्यौतिषपूर्व एष
कृतो मुकुन्देन मुदे बुधानाम् ॥' इति ।

१८५७ शकाब्दे बुधवारान्वितायां वैशाखकृष्ण-षष्ठ्यां चायं समाप्तिमगमत् ।

(२४) 'जातकसूत्रम्' ।

अस्य

(प्रथमभागः)

इहास्योपक्रमोपसंहारौ नस्तः । हेतुरत्रायुर्निर्णय-रचनासमये जातकग्रन्थेभ्यो यानि सूत्राणि रचितानि तानीतस्ततो विनष्टताङ्कतानि । यान्यवशिष्टानि तानि सर्वाणि द्वितीयभाग-सूत्रैः सह सुरक्षितानि सन्ति । तानि तत्र द्रष्ट-व्यानि । एतन्नष्टं भ्रष्टं जातम् ।

(२५) 'आयुर्निर्णयः ।' (अमुद्रितः)

'तत्रोपक्रमः'—

व्रजविपिनविहारी राधिकाऽऽराधनीयः
सुरभिशिशुसमूहैश्चावृतो गोपबालैः ।
सुरपतिमदहारी देवकीनन्दनो यो
जयतु जलदवर्णो गोपरूपो हरिः सः ॥

बादरायणगर्गौ च यवनाख्यः पराशरः ।
वराहः श्रीपतिः सत्य–मणित्थ-श्रीधरादयः ॥
अमीषां शास्त्रतः सारं संगृह्य प्रकरोम्यहम् ।
आयुर्निर्णयमादेशिवृन्दप्रीत्यै मनोरमम् ।' इति ।

मुकुन्द इति शेषः ।

'उपसंहारश्च'—

भागीरथीविमलतीरसमीपशोभे
खण्डाभिधेर्गचरसंवसथे सविप्रे ।
श्रीख्यातिरामगणकोऽजनि तंत्रविज्ञ—
स्तस्यात्मजो रघुवरो गणकाग्रगण्यः ॥
तत्सूनुना बुधवरेण मुकुन्दनाम्ना—
ऽऽयुर्निर्णयो भुजगबाणपुराणतुल्ये ।
शाके मधौ सितदले ज्ञदिने दशम्या-
मेष व्यधायि बुधपुङ्गववृन्दतुष्ट्यै ॥
मयूरपिच्छं मुरली च याव-
च्छ्रीकृष्णचन्द्राङ्गमलङ्करोति ।
तावद्विदां सम्मदयन्मनश्च
लोके सदाऽयं प्रथितो निबन्धः ॥
सीतात्रिमार्गोत्तमतीरवर्त्तिनो
देवप्रयागाख्यपुरो निवासिनः ।
मच्छिष्यमुख्यस्य विशुद्धचेतसो
भूयादसौ चक्रधरस्य शर्म्मणे ॥' इति ।

१८५८ शकाब्दे चैत्रशुक्लदशम्यां बुधवासरे चायं समाप्तिमगमत् ।

'जातकसूत्रम् ।'

अस्य

(द्वितीयभागः) (अमुद्रितः)

'तत्रोपक्रमः'—

श्रीराधिकायाः प्रियपादयुग्मं
कञ्जोपमं पुण्यतरं प्रणम्य ।
तोषाय होराविदुषां मुकुन्दः
करोम्यहं जातकसूत्रमेतत् ॥' इति ।

'उपसंहारश्च'—

मातङ्गबाणाहिहिमांशुतुल्ये
शाके सहस्ये हयदेहगेऽर्के ।
कृतं मुकुन्देन सुधीहिताय
मनोरमं जातकसूत्रमत्र ॥' इति ।

१८५८ शकाब्दे, पौषमासे धनुषीने चेदं समाप्तिमगमत् ।

* (२६) 'ज्योतिस्तत्त्वम्' ।

'तत्रोपक्रमः'—

गोपानां बालवृन्दैः सह विपिनलता-मण्डपे क्रीडयन्यो
मोहनार्थं कमनमुपगतं मोहयित्वाऽप्यगोप्सीत् ।
नत्वा तं बालकृष्णं विबुधजनकृतेः सारमुद्धृत्य सर्वं
'ज्योतिस्तत्त्वं' मुकुन्दो रचयति सरलं बालकानां हिताय ॥' इति ।

'उपसंहारश्च'—

'वर्षे दर्शननन्दगोमहिमिते श्रीवैक्रमीये तपोमासे भास्वति नक्रगेसितदले विष्णोस्तिथौ ग्लौदिने ।
'ज्योतिस्तत्त्वमिदं मुकुन्दविदुषा देवप्रयागस्थले बालानां पठनाय शुद्धमनसां मेधाविनां निर्मितम् ॥' इति ।

१९९६ श्रीवैक्रमीयाब्दे, माघमासे, मकरङ्गतेऽर्के, शुक्लद्वादश्यां चन्द्रवासरे चेदं समाप्तिमगमत् ।

(२७) 'बालबोधदीपिका' । (अमुद्रिता)

एषा तु
मद्विरचितैः पद्यैरेव (सङ्कलिता)

'तत्रोपक्रमः'—

प्रणम्य कृष्णचन्द्रपादयुग्मकं सुकोमलं
सरोजसन्निभं समस्तदेवसंघसेवितम् ।
मुकुन्दरामकाश्यपीसुरो मनोहरां स्फुटां
करोमि बालबोधदीपिकां सुबालसम्मुदे ॥' इति ।

'उपसंहारश्च'—

'शकेऽनलाङ्गनागमेदिनीमिते सहोद्य कृत्—
तिथौ दलेऽसिते ऽसृजोऽह्नि 'बालबोधदीपिका' ।
प्रकारि खण्डवासिना मुकुन्दशर्म्मणा—
भवत्वसावनारतं सुबालवृन्दशर्म्मणे ॥' इति ।

१८६३ शकाब्दे मार्गशीर्षकृष्णसप्तमीतिथौ भौमवासरे चेयं समाप्तिमगमत् ।

(२८) 'जातकभूषणम्' । (अमुद्रितम्)

'तत्रोपक्रमः'—

'नत्वा पादयुगं सरोरुहनिभं संसेवितं देवतासंघैर्योगिजनैरतीव कुशलैः श्रीकृष्णचन्द्रस्य तत् ।

---

* अयं महान् ग्रन्थो जनजनपदकल्याणार्थं मया विरचितः । तस्य द्वौ भागौ । १४०० मितानि पृष्ठानि । तत्र पादोनाष्टसहस्र ७७७५ मितानि मूलश्लोकानि । अस्य मूल्यं रूप्यकाणां ५०) पञ्चाशत् । आर्मव्ययस्तु पृथक् । एष मया परमप्रियशिष्येण 'बकधरेण जोशी' इत्युपाह्वयेन निजद्रव्येण पुण्याख्यपत्तनस्थप्रशान्तमुद्रणालये संमुद्र्य मत्समर्पणं कृतम् । तेन स धन्यवादार्हः ।

आलोक्याऽखिलजातकं मुनिवरैर्यत्प्राक्तनैः कीर्तितं कुर्वे 'जातकभूषणं' बुधजनप्रीत्यै मुकुन्दद्विजः ॥' इति ।

'उपसंहारश्च'—

शाकेऽनलाङ्कोरगभूप्रमाणे
जीवान्वितायां नभसो नवम्याम् ।
सीतात्रिमार्गासरिदन्तराले
देवप्रयागे पुरि खण्डवासी ॥
बडेथवालाभिधजातिजातो,
मुकुन्दरामोऽरचयत्सुखाय ।
विमत्सराणां गणकोत्तमानां
मनोहरं जातकभूषणाख्यम् ॥' इति ।

१८६३ शकाब्दे गुरुवारयुतायां श्रावणनवम्यां चेदं समाप्तिमगमत् ।

तच्च—

(२९) 'पीयूषधारा'

इत्यनया मद्विरचितया संस्कृतव्याख्यया समलङ्कृतम् ।

'तत्रोपक्रमः'—

'श्रीकृष्णो वसुदेवनन्दनवरो गोपीजनानां प्रभुर्योगीशः शिशुगोगणैः परिवृतस्तीरे सुताया रवेः । यस्तत्पादयुगं मुकुन्दगणको नत्वा शिशूनां मुदे कुर्वे जातकभूषणस्य विवृतिं 'पीयूषधारा'-मिमाम् ॥' इति ।

'उपसंहारश्च'—

वेदाङ्कसिद्धीन्दुमिते शकेऽब्दे
सिते तपस्ये दशमीकुजाहे ।
टीका कृता जातकभूषणस्य
सद्बालतोषाय मुकुन्दनाम्ना ॥' इति ।

१८६४ शकाब्दे फाल्गुनशुक्लदशमीभौमवासरे चैषा समाप्तिमगमत् ।

(३०) 'अष्टकवर्गनिबन्धः ।' (विक्रीतोऽयम्)

'तत्रोपक्रमः'—

नारायणो नन्दनिकेतने यो
वृतो ऽर्भकैर्बालमुकुन्दरूपः ।
करोति लीलां रुचिरां विचित्रां
जगद्धिताय प्रणमाम्यहं तम् ॥' इति ।

मुकुन्द इति शेषः ।

'उपसंहारश्च'—

ये जानन्ति बुधाः खगाष्टवर्ग-
माहात्म्याभिधमीश्वरत्वमीयुः ।
ते तस्मात्सततं निबन्धमेतं
निष्णाता वसुधासुराः पठेयुः ॥
खण्डग्रामे विप्रमुख्यो मुकुन्दो
योऽभूत्संघं जातकानां निरीक्ष्य ।
गोगोगोभूसम्मिते विक्रमाब्दे
चैत्रे मासे शुक्लपक्षे दशम्याम् ॥
भोपेतायां व्योमरत्ने विसारे
तेन प्रोक्तोऽयं निबन्धः सुकान्तः ।
बद्धो वृत्तैर्वेदरामाब्धितुल्यै
राधानाथप्रीतयेऽयं समस्तु ॥' इति ।

१९९९ वैक्रमीयाब्दे चैत्रमासे शुक्रवारसंयुतायां दशम्यां मीनराशिगते मिहिरे चायं समाप्तिमगमत् ।

स च—

(३१) 'मनोरमा'—

इत्यनया मद्विरचितया संस्कृतव्याख्यया सम-

लङ्कृतः ।

'तत्रोपक्रमः'—

नन्दस्य नन्दनं नत्वा मुकुन्दो बालसम्मुदे ।
अष्टवर्गनिबन्धस्य टीकां कुर्वे मनोरमाम् ॥' इति ।

'उपसंहारश्च'—

'आसीद्विप्रकुले मुकुन्दगणको ग्रामे च खण्डाभिधे
तेनाऽकारि मनोरमा गतमला टीका निबन्धस्यहि ।
वर्षे विक्रमभूपतेः खखनभोदोस्सम्मिते माधवे
मासे कृष्णदले भुजङ्गमतिथौ भानोर्दिनेऽर्केऽजगे ॥'
इति ।

२००० वैक्रमीयाब्दे वैशाखमासे कृष्णपञ्चम्यां रविवासरे मेषगते मार्तण्डे चैषा समाप्तिमगात् ।

(३२) 'भावमञ्जरी ।' (विक्रीतेयम्)

'तत्रोपक्रमः'—

निधाय मानसे व्रजाटवीविभोः
पदाम्बुजं विधाय वन्दनं गुरोः ।
मुकुन्दरामदैववित्सुमञ्जुलां
करोमि भावमञ्जरीं विदां मुदे ॥' इति ।

'उपसंहारश्च'—

'सिद्धश्रीगढवालनीवृति महाढांगूप्रदेशान्तरे
खण्डे संवसथे द्विजातिमहितः श्रीचन्द्रदत्तोऽजनि ।
तस्माच्छ्रीकलिरामनामविदितः श्रीख्यातिरामस्तत-
स्तस्मात्सूरिशिरोमणी रघुवरो श्रीमान्प्रभूतादरः ।
तत्कीर्त्यङ्गभवो मुकुन्दगणको देवप्रयागे वस-
ञ्ज्योतिः शास्त्रसुमस्य ये मधुकरा ह्यास्तन्मुदे
मञ्जरीम । भावाद्यां विमलां स्फुटां व्यरचयद्-
गोङ्गोऽरगेलाशके मास्यूर्ज्जे भृगुवासरे भपतिथा-
वेषाऽगमत्पूर्णताम् ॥' इति ।

१८६६ शकाब्दे कार्तिकमासे पूर्णिमायां भृगुवारे चेयं समाप्तिमगमत् ।

सा च—

(३३) 'मधुव्रता' ।

इत्यनया मद्विरचितया संस्कृतव्याख्यया समलङ्कृता ।

'तत्रोपक्रमः'—

'नत्वा तं व्रजपः केन यः सव्रजार्भकव्रजः ।
विन्मुदे भावमञ्जर्य्याष्टीकां कुर्वे 'मधुव्रताम्' ॥'
इति ।

मुकुन्द इति शेषः ।

'उपसंहारश्च'—

'शकेऽङ्कषड्धृतिमिते तपोमासे विनिर्मिता ।
'मधुव्रता' मुकुन्देन टीकेयं पूर्णतामगात् ॥' इति ।

१८६६ शकाब्दे माघमासे चेयं समाप्तिमगमत् ।

* (३४) 'मुकुन्दकोषः ।' (अमुद्रितः)

अस्य

साहित्यानेकार्थवर्गार्थशब्दचयनप्रारम्भः । ...

'तत्रोपक्रमः'—

लीलां विचित्रां व्रजकाननेव्रज—

* महान् कोषोऽसौ मञ्जूषायां शोभते । मुद्रणाशा क्वचिदपि न दृश्यते । अस्य साहित्यानेकार्थभागोऽप्यपूर्णः ।

न्च्छायाङ्गिनां चक्रधरश्चकार यः ।
प्रणम्य तं केन मुकुन्ददेववि-
न्मुकुन्दकोषं रचयामि सन्मुदे ॥' इति ।

'उपसंहारश्च'—

'वामे तटे निर्जरनिम्नगायाः
खण्डाभिधः संवसथोऽस्ति तत्र ।
श्रीकीर्तिदेव्यास्तनया ग्रभूवं-
स्त्रयोऽग्रजस्तेषु मुकुन्दनामा ॥
तेनाम्बरागेभमृगाङ्कतुल्ये
शाके मधौ मासि सितान्यपक्षे ।
महेशतिथ्यां महिसूनुवारे
व्यधायि कोषो बुधसम्मुदेऽयम् ॥' इति ।

१८७० शकाब्दे चैत्रकृष्णाष्टम्यां मङ्गलवासरे चेदं समाप्तिमगमत् ।

(३५) 'कोशनामावली' । (अमुद्रिता)
(गद्यात्मिका सङ्कलिता)

'तत्रोपक्रमः'—

'प्रणम्य केन देवक्याः सूनोश्चरणपङ्कजम् ।
कोशनामावलीं कुर्वे मुकुन्दः कोशविन्मुदे ॥' इति ।

'उपसंहारश्च'—

'दिनाभ्राश्विमिते वर्षे भाद्रे शुक्ले विधोस्तिथौ ।
शनौ कोशविदां प्रीत्यै कोशनामावली कृता ॥' इति ।

मुकुन्देनेति शेषः ।

२०१५ वैक्रमीयाब्दे भाद्रपूर्णिमायां शनौ चैषा समाप्ता ।

(३६) 'कोशनामावली' ।
(पद्यात्मिका) (मुद्रिता)

'तत्रोपक्रमः'—

'श्रीदेवकीदेहसमुद्भवस्य
पादारविन्दं हृदि सन्निधाय ।
रम्यां मुकुन्दः प्रकरोमि कोश-
नामावलीं कोशविदां हिताय ॥' इति ।

'उपसंहारश्च'—

तिष्यभ्राक्ष्युन्मिते वर्षे स्त्रीगेऽर्केऽब्जतिथौ शनौ ।
मुकुन्देन कृता कोश-नामावली विदां मुदे ॥' इति ।

२०१५ वैक्रमीयाब्दे कुमारिकाङ्गतेऽर्के पूर्णिमायां शनौ चेयं समाप्ता ।

'मुकुन्दकोषः' ।

अस्य

(३७) 'लिङ्गानुशासनवर्गः' । (मुद्रितः)

'तत्रोपक्रमः'—

'प्रणम्य शिरसा नन्दनन्दनांघ्रिसरोरुहम् ।
लिङ्गानुशासनं रम्यं कुर्वेऽहं लिङ्गविन्मुदे ॥' इति ।

मुकुन्द इति शेषः ।

'उपसंहारश्च'—

वामे तटे निर्जरनिम्नगायाः
खण्डाभिधः संवसथोऽस्ति तत्र ।
श्रीकीर्तिदेव्यास्तनया ग्रभूवं-
स्त्रयोऽग्रजस्तेषु मुकुन्दनामा ॥
तेनाश्विकुञ्जरभुजङ्गशशाङ्कतुल्ये
वर्षे शके तपसि मासि सितान्यपक्षे ।
भास्वत्तिथौ शशिनि लिङ्गविदां हिताय
लिङ्गानुशासनमिदं रचितं सुरम्यम् ॥' इति ।

१८८२ शकाब्दे, माघे कृष्णसप्तम्यां शनावेष समाप्तिमगमत् ।

(३८) 'ज्यौतिषशब्दकोषः' । (मुद्रितः)

'तत्रोपक्रमः'—

प्रणम्य कृष्णचन्द्रस्य पवित्रं पादपङ्कजम् ।
त्रिस्कन्धज्यौतिषात्प्रायः शब्दानादाय संग्रहः ॥
क्रियतेऽयं मुकुन्देन प्रीत्यै होराविदां मया ।
अन्ये साहित्यिकाः शब्दा वेद्या हैमादिकोषतः ॥'
इति ।

'उपसंहारश्च'—

श्रीवैक्रमीये नखखाश्वितुल्ये
वर्षे तपः शुक्लदले दशम्याम् ।
मघाजवारे जननादतीते-
ऽङ्गागोन्मिताब्दे गढदेशजेन ॥
श्रीकीर्तिदेव्यास्तनुसम्भवेन
श्रीकृष्णपादाम्बुजषट्पदेन ।
मुकुन्दनाम्ना गणकेन कोषो—
ऽसौ निर्मितश्चक्रधरस्य तुष्ट्यै ॥' इति ।

२०२० वैक्रमीयाब्दे माघशुक्लदशम्यां शुक्रवासरे जन्मतः ७६ तुल्ये गताब्दे चायं समाप्तिमगात् ।

'भूवलयचक्रम्'

(भूगर्भशास्त्रम्) केनचिन्महर्षिणा
विरचितम् ।

तच्च—

(३९) 'मुकुन्ददैवज्ञकृतया संस्कृतव्याख्यया समलङ्कृतम् ।

'तत्रोपक्रम,'—

गिरिराजधरस्य चरण—
सरसिजं निजमानसे सन्निधाय ।
करोमि भूवलयचक्र—
विवृतिं मुदे भूगर्भशास्त्रविदाम् ॥' इति ।

'मुकुन्द' इति शेषः ।

अस्य भूवलयचक्रस्यपद्यानि अतीवाशुद्धानि पाठसंशोधनार्थं पुस्तकान्तराणि नोपलभ्यते तेनोपसंहाराभावो जातः । यद्यप्यस्य श्लोकानां केन चित्कृताव्याख्या सामूहिकरूपेण विद्यते सापि न समीचीना भाति । अतः पुस्तकमिदमितस्ततोऽन्वेषणीयं विद्वद्भिः ।

'लम्पाकशास्त्रम्' । (अमुद्रितम्)

श्रीपण्डितवर्य्यपद्मनाभेन विरचितम् ।

तच्च

(४०) श्रीमुकुन्ददैवज्ञेन संशोधितम् ।

'तत्रोपसंहारः'—

'पद्मनाभविरचितं शास्त्रं लम्पाकसञ्ज्ञकम् ।
शास्त्रस्यास्य मुकुन्देन विन्मुदे शोधनं कृतम् ॥'
इति ।

अस्य श्रीपण्डितसदानन्दकृता संस्कृतटीका-अवन्तिकास्थमाधव (राजकीय) पुस्तकालये वर्तते । सा च मद्रासस्य-अड्डियारपुस्तकालये तेलगूलिप्यां वर्तते । तत्र तस्य प्रतिद्वयं विद्यते इति श्रुतमिति । हा कष्टमेतदपूर्णसंशोधनम् ।

* 'अश्वारूढी'

श्रीमल्लारिदैवज्ञेन
विरचिता ।

सा च—

श्रीकेशवदेवकृतसंस्कृतटीकयोपेता ।

सैव—

(४१) श्रीमुकुन्ददैवज्ञकृतसंस्कृतटिप्पण्योपेता च ।

'तत्रोपक्रमः'—

नमस्कृत्य यशोदाया नन्दनं बुधतुष्टये ।

---

* एषा तु संस्कृतटीकाटिप्पणीसहिता संशोधितामुद्रिता मत्पुस्तकालये विद्यते ।

विधीयते मुकुन्देन ह्यश्वारूढ्याः सुटिप्पणी ॥'
इति ।

'उपसंहारश्च'—

'मल्लारिदैवज्ञविनिर्मिताश्वा—
रूढी तथा केशवदेवटीका ।
संशोधिता प्राज्ञमुकुन्दनाम्ना
या सा बुधानां प्रमदाय भूयात् ॥' इति ।

पद्येनैकेनेमामुपसंहारयति—

'वर्षे त्रियुग्माम्बरदोः प्रमाणे
मास्याश्विने श्रीविजयादशम्याम् ।
चित्राविदुष्या निजनाथतुष्ट्यै,
भूयात्कृता सङ्कलिता सदैषा ॥

वैक्रमीय इति शेषः ।

इति श्रीमुकुन्ददैवज्ञधर्म्मपत्नीश्रीमतीचित्रादेवीविदुष्या सङ्कलिताकृतैषा मुकुन्दग्रन्थनामाद्यावली समाप्तिमगमत् ।' इति शम् ।

